चतुरचराण्यभ्यस्यन्ति ।२। उप नः सुतमा गहि सोमभिन्द्रेत्युक्थमुखम् ।३। प्र वो मह इति जागतम् ।४। मोर्या पौतिमिति यजति ।५। ॥१८॥

अथाच्छावाकस्याहीनिक्याः ।१। पन्यंपन्यमित्सोतारः पन्य इदुप गायतेति स्तोत्रियानुरूपौ प्रथमे ।२। आ त्वा विशन्त्विन्दव आ त्वा विशन्त्वाशव इत्युत्तमे ।३। संस्थाप्य रात्रिपर्यायान् [4] ॥१९॥

आश्विनाय स्तोष्यमाणेषु अक्ताक्षौ जुहोति ।१। समया वाचा शंसेत् ।२। उत्तरोत्तरिण्या वा ।३। यः प्रातरनुवाकस्तदाश्विनम् ।४। तस्य विकारं व्याख्यास्यामः ।५। यथाछन्दसं शस्त्रम् ।६। बार्हतीनां प्रतिपदां प्रथमंप्रथमं प्रगाथं पुनरादायं ककुप्कारम् ।७। अग्निर्होता गृहपतिरिति प्रतिपदापोरेवतीसुद्धृत्य ।८। चतुर्दश गायत्राद्धरति ।९। आनुष्टुभाद्वे ।१०। त्रैष्टुभात्सप्तदश शतम् ।११। नित्यानि काक्षीवतान्यागस्त्यानि च ।१२। प्रथमं तु काक्षीवतं शस्त्वा काराधद्वोत्रिया नव ।१३। ऊर्ध्वमागस्त्येभ्यस्त्रियतं सुपर्णम् ।१४। अभ्यासो आश्विनीनां तावत् ।१५। समिद्धश्चिदिति तिस्र उद्धरति ।१६। अयं वां मधुमत्तम इत्यष्टौ यथास्थानम् ।१७। एकादशीष्विन्द्रात् ।१८। तथाग्नेयाज्जागतात् ।१९। उत्तमेन पाङ्क्तेन पादेनोदयं काङ्क्षेत् ।२०। उदिते सौर्याणि ।२१। उदु त्यं जातवेदसमिति नव ।२२। चित्रं देवानाम् ।२३। नमो मित्रस्य ।२४। इन्द्र क्रतुमिति प्रगाथः ।२५। मही द्यौरिति तिस्रः ।२६।

विश्वस्य देवी मृचयस्य जन्मनो न या रोषाति न ग्रभ

इति द्विपदा ।[27]२६। बृहस्पते अति यदर्यो अर्हादिति परिदधाति ।[28]२७। प्रतिपदे चाहावः परिधानीयायै च ।[29]२८। तत्संपदा बृहतीसहस्रं संपद्यते ।[30]२९। इमे सोमासस्तिरोअह्न्यास इति पुरोनुवाक्या ।[31]३०। होता यक्षदश्विना सोमानां तिरोअह्न्यानामिति प्रैषः ।[32]३१। उभा पिबतं प्र वामंधांसीत्यर्धर्चे संधायार्धर्चेन वषट्करोति ।[33]३२। विराजैवेति कौषीतकिः ।[34]३३। अश्विना वायुनेति वा ।[35]३४। ॥ २० ॥

त्रिवृद्बहिष्पवमानः ।१। अग्निष्टोम च ।२। पञ्चादितः पञ्चदशानि ।३। रात्रिश्च ।४। पञ्च सप्तदशानि ।५। षडेकविंशानि ।६। इति ज्योतिषः स्तोमाः ।७। एत एवाभिप्लवस्य ।८। ॥ २१ ॥

अग्निं तु चेष्यमाणस्यादीक्षितस्येष्टिः ।१। अग्नये ब्रह्मण्वते ऽग्नये क्षत्रवते ऽग्नये क्षत्रभृते ।२। पौर्णमासीविकारः ।३। ब्रह्म प्रजावदा भर ब्रह्म च ते जातवेद इत्यग्नये ब्रह्मण्वते ।४। अर्षन्तस्त्वासाकमग्ने अध्वरमग्ने द्युम्नेन सदस्व हव्येत्युत्तरयोः ।५। बह्वीनां चेष्यमाणानां संनिवपनीया ।६। एकस्योखासंभरणीया ।७। ॥ २२ ॥

प्राजापत्यश्च पशुबन्धः ।१। वायव्यो वा ।२। अग्नये वा कामाय ।३। पुरुषो ऽश्वो ऽविको गौरश्च इति पञ्च पशवः ।४। अजो वा तूपरः ।५। प्राजापत्ये चैके वायव्यं पशुपुरोळाशं कुर्वन्ति ।६। प्राजापत्यं वायव्ये ।७। वैश्वानरीयमाग्नेये ।८। हिरण्यगर्भ इति पुरोनुवाक्याभिप्तम उत्तरा याज्याः प्राजापत्यस्य ।९। उपांशु ।१०। एकया च गाये नु कुविदङ्गेति पुरोनुवाक्याः पीवोअन्नाम याभिर्यासि प्र वायुमच्छेति वायव्यस्य ।११। आ ते वत्सो मनो

यमत्तुभ्यं ता अङ्गिरस्तमाग्निः परेषु धामस्विति पुरोनुवाक्या वयं ते अद्यारिम तमीळे च लेत्याग्नेयस्य ।११। बहुवत्पशुनिगमाः पशुस् क्रियमाणेषु पृथिवीं शरीराणीत्यातः ।१२। एकवदत ऊर्ध्वम् ।१४। ॥२३॥

चिहविंश दीक्षणीया ।१। आग्नावैष्णवो वैश्वानरीय आदित्ये-भ्यश्च ।२। त्यासु चचित्यान्धारयन्तः ।३। पञ्चहविर्वा ।४। अदितये चतुर्थः पञ्चमः सरस्वत्यै ।५। पञ्चहविर्वानिष्ट्या ।६। आग्नेयैन्द्रौ वैश्वदेवबार्हस्पत्यौ वैष्णवश्च ।७। शुचिमर्कैस्तं ग्मासः ।८। चितिभ्यः प्रणीयमानाभ्य इत्युक्त[9] पुरीष्यासः प्रो त्ये अग्नयो ऽग्निषु विश्वेभिरग्ने अग्निभिरग्ने विश्वेभिरग्निभिरित्युपांश्वनुब्रुवन्पश्चा-दनुसमेति ।९।[10] ॥२४॥

संचिते परिश्रुते[1] ऽन्युक्थमनुशंसेत्युक्तमित्यस्य पश्चादुपविश्याज्ये-धमृषाणीं सस्तोनानाहृय सजपेनानुशंसति ।१।[2] वैश्वानरायेत्युक्तः पुरो-नुवाक्यामनूच्य याज्यया यजति[3] प्रयाजानुयाजान्वा परिहाप्य ।२।[4] ॥२५॥

अग्नीषोमीयस्य पशुपुरोळाशमन्वञ्चि देवसूवो हवींषि ।१। अग्नये गृहपतये सोमाय वनस्पतये सवित्रे सत्यप्रसवाय रुद्राय पशुपतये बृहस्पतये वाचस्पतय इन्द्राय ज्येष्ठाय मित्राय सत्याय वरुणाय धर्मपतये ।२। अग्निर्होता गृहपतिर्हव्यवाळग्निरा विश्वदेवं म प्रमिय इन्द्रं वयं महाधन उरुं नः ।३। सवप्रदाहवींषि म ।४। ॥२६॥

अग्नये वामन्तिकाय गायत्राय त्रिवृते राथन्तरायेन्द्राय वैश्याय

इति द्विपदा ।२६। दृश्यते श्रति यदर्घा अर्घादिति परिदधाति ।२७। प्रतिपदे चाहावः परिधानीयायै च ।२८। तस्यां पदा वृह-तीसहस्रं संपद्यते ।२९। इमे सोमामशिरोऽग्न्याय इति पुरोनु-वाक्या ।३०। होता यक्षदश्विना सोमानां शिरोऽग्न्यानामिति प्रैषः ।३१। उभा पिबतं प्र वामन्धांसीत्यर्धर्चां संधायार्धर्चेन वषट्करोति ।३२। विराजैवेति कौषीतकिः ।३३। अश्विना वायुनेति वा ।३४। ॥ २० ॥

चिवृद्दहिष्पवमानः ।१। सन्धिवाम च ।२। पञ्चादितः पञ्च-दशानि ।३। राचिश्च ।४। पञ्च सप्तदशानि ।५। पञ्चैकविंशानि ।६। इति ज्योतिषः स्तोमाः ।७। एत एवाभिप्लवस्य ।८। ॥ २१ ॥

अग्निं तु चेष्यमाणस्यादीक्षितस्येष्टिः ।१। अग्नये ब्रह्मण्वते ऽग्नये क्षत्रवते ऽग्नये क्षत्रभृते ।२। पौर्णमासीविकारः ।३। ब्रह्म प्रजावदा भर ब्रह्म च ते जातवेद इत्यग्रये ब्रह्मण्वते ।४। अर्चन्तस्त्वामा-कमग्ने अध्वरमग्ने द्युम्नेन स्वदक्ष इत्येतयुत्तरयोः ।५। वक्ष्यतां चेष्य-माणानां संनिवपनीया ।६। एकस्योखासंभरणीया ।७। ॥ २२ ॥

प्राजापत्यश्च पशुबन्धः ।१। वायव्यो वा ।२। कामाय वा कामाय ।३। पुरुषो ऽश्वो ऽविरजो गौरश्च इति पञ्च पशवः ।४। अजो वा तूपरः ।५। प्राजापत्ये चैके वायव्यं पशुपुरोडाशं कुर्वन्ति ।६। प्राजापत्यं वायव्ये ।७। वैश्वानरीयमाग्नेये ।८। हिरण्यगर्भ इति पुरोनुवाक्याभिस्त्र उत्तरा याज्याः प्राजापत्यस्य ।९। उपांशु ।१०। एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशती चेति...

यमत्तुभ्यं ता अङ्गिरस्तमाग्निः परेषु धामस्विति पुरोनुवाक्या वयं ते अद्याग्राम तमीले च लेत्याग्नेयस्य ।११। बहुवत्पशुनिगमाः पञ्चसु क्रियमाणेषु पृथिवीं शरीराणीत्यातः ।१२। एकवदत ऊर्ध्वम् ।१४। ॥२३॥

चित्वविश्व दीक्षणीया ।१। आग्नावैष्णवो वैश्वानरीय आदित्येभ्यश्च ।२। त्यान्नु क्षत्रियान्धारयन्त: ।३। पञ्चहविर्वा ।४। अदितये चतुर्थः पञ्चमः सरस्वत्यै ।५। पञ्चहविर्वानित्या ।६। आग्नेयैन्द्रौ वैश्वदेवबार्हस्पत्यौ वैष्णवश्च ।७। शुचिमर्कैस्तं शम्यास: ।८। चितिभ्यः प्रणीयमानाभ्य इत्युक्तः[9] पुरीष्यास: प्रो त्ये अग्नयो ऽग्निषु विश्वेभिरग्ने अग्निभिरग्ने विश्वेभिरग्निभिरित्युपांश्वनुब्रुवन्पद्यादनुयनेति ।९[10]। ॥२४॥

संचिते परिश्रुते[1] ऽस्त्युक्थमनुशंसेत्युक्तायित्यस्य पश्चादुपविश्याज्येयसूर्ष्णीं शंसनेनानाहूय सजपेनानुशंसति ।१[2]। वैश्वानरायेत्युक्तः पुरोनुवाक्यामनूच्य याज्यया यजति[3] प्रयाजानुयाजान्वा परिहाप्य ।२[4]। ॥२५॥

अग्नीषोमीयस्य पशुपुरोळाशमन्वञ्चि देवसूभ्यो हवींषि ।१। अग्नये गृहपतये सोमाय वनस्पतये सवित्रे सत्यप्रसवाय रुद्राय पशुपतये बृहस्पतये वाचस्पतय इन्द्राय ज्येष्ठाय मित्राय सत्याय वरुणाय धर्मपतये ।२। अग्निर्होता गृहपतिर्हव्यवाळग्निरा विश्वदेवं न प्रमिय इन्द्रं वयं महाधन उरुं नः ।३। सर्वपृष्ठाहवींषि च ।४। ॥२६॥

अग्नये वासन्तिकाय गायत्राय त्रिवृते राथन्तरायेन्द्राय पैष्माय

त्रैष्टुभाय पञ्चदशाय बार्हताय विश्वेभ्यो देवेभ्यो वार्षिकेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो मित्रावरुणाभ्यां शारदाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्यां बृहस्पतये हैमन्तिकाय पाङ्क्ताय त्रिणवाय शाक्वराय सवित्रे शैशिरायातिच्छन्दसाय त्रयस्त्रिंशाय रैवतायानुमतये ऽग्नये वैश्वानराय कायादितये विष्णुपत्न्यै ।१। अर्वन्त्स्वास्माकमग्ने अध्वरस्थेन यो म याद्वा बृहस्पते शुपस्वैवा पिबे ऽमागदो वाममद्य

अन्वद्य नो अनुमतिर्यज्ञं देवेषु मन्यताम् ।
अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥
अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ॥

इति ।२। न पशुतन्त्रे हवींषि चोदनामानि निगमास्त्वभान्ते ।३। यथा संस्थाप्यानूबन्ध्यायास्त्वाष्ट्रेण पशुनोपांशु पत्नीशाले चरन्ति ।४। पर्यग्निकृतमुत्सृजन्ति न संस्थापयन्ति ।५। आज्येन वा पशुधर्मणा संस्थापयन्ति ।६। पिवस्वतः प्रथमभाजम् ।७। ॥२७॥

देविकाहवींषि चाप्यधि पशुपुरोडाशम् ।१। अनुमत्यै कुह्वै राकासिनीवालीभ्यां धात्रे ।२।

कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु ।
सं दाशुषे किरतु भूरि वामं रायस्पोषं चिकितुषे ददातु ॥
धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् ।

वयं देवस्य धीमहि सुमतिं सत्यधर्मणः ॥

धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान।

धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवज्जुहोत॥

इति।३। देवीभ्यश्च हवींषि।४। अङ्ग्य ओषधीभ्यो गोभ्य उपचे रायचे सूर्यायै दिवे पृथिव्यै वाचे गवे।५। आपो हि ष्ठा यो वो वृतास्वः।६। या ओषधीः पूर्वा जाता विश्वाः।७। यूयं गावो न ता ऊर्वा।८। प्रति त्या सूनरी यत्या सत्येभिः।९। रात्री व्यख्यत्।

ये ते रात्रि नृचक्षसो युक्तासो नवतिर्नव।

अशीतिः सन्त्वष्टा उतो ते सप्त सप्ततिः॥।१०।

द्वे ते सुकिंशुकं।११। एन्द्र याहि हरिभिः सखे विष्णो।१२। स्योना पृथिवि बलित्था पर्वतानां।१३। देवीं वाचं यद्वाग्वदन्ती।१४। माता रुद्राणां वचोविदम।१५। दिशां वाजेष्टीः।१६। अग्नय इन्द्राय मित्रावरुणाभ्यां बृहस्पतये विश्वेभ्यो देवेभ्यो विष्णवे।१७। संस्थितायां चोदवसानीयायां मैत्रावरुण्या पयस्यया नानिष्ट्वाग्निचित्मिथुनं चरेचरेत्।१८। ॥ २८॥

इति शाङ्खायनसूत्रे नवमोऽध्यायः समाप्तः।

---

ओम्।

---

ग्रुद्गुपचम्याष्टम्यां द्वादशाहाय दीक्षन्ते।१। द्वादश दीक्षाः।२। द्वादशोपसदः।३। सुत्यान्यहानि द्वादश।४। अतिरात्रः सुत्यानां प्रथमं चोत्तमं च।५। मध्ये दशरात्रः।६। पृष्ठ्यः षडहः।७। त्रयश्छन्दोमाः।८। दशममहः।९। अयं यज्ञ इति याज्या हारियोजनस्य।१०। अननुवषट्कृत एवासंप्रेषितो मैत्रावरुणः परा याहि मघवन्नित्यनूच्य आयेदस्तमिति वेह मद एव मघवन्नित्यतिप्रैषमाह द्वितीयप्रभृतिषु।११। प्रायणीये वा यथासमाम्नातम्।१२। श्वः सुत्या वामिंद्राग्नी तां वां प्रब्रवीमि विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोमपेभ्यो ब्रह्मण्याचं यस्केत्याग्नीध्रः स्वस्य धिष्ण्यस्य पश्चादुपविश्य।१३। नित्यमेतत्प्रागुत्तमादह्नः।१४। पत्नीसंयाजान्तता।१५। आश्विषामनिर्वचनम्।१६। नामधेयाग्रहणं च।१७। प्रायणीयोदयनीययोः सारस्वतः।१८। माधुच्छन्दसे वा।१९। द्विरात्रप्रभृतिष्वहःसंघातेषु यत्र होताश्विनं शंसेत्तत्र मैत्रावरुणः प्रातरनुवाकमनुब्रूयात्।२०।॥१॥

त्रिवृत्स्तोमं रथन्तरपृष्ठमग्निष्टोमः प्रथमं दाशरात्रिकम्।१। उप प्रयन्तो अध्वरमित्याज्यं सूक्ते प्र वो देवायेति ससूक्ते।२। माधुच्छन्दसः प्रउगः।३। आ यात्विन्द्रो ऽवस इति मरुत्वतीयम्।४। आ न इन्द्रो दूरादिति निष्केवल्यम्।५। अग्ने वर्चस्विन्वर्चस्वी त्वं देवेष्वसि वर्चस्व्यहं मनुष्येषु भूयासमित्यातिग्राह्यं भक्षयति।६। युञ्जते मन

इहेह वो हयो न विद्वानित्युत्तमे वा परिधाप्येति वैश्वदेवे विकारः।७। पञ्चजनीया परिधानीया सर्वत्र वैश्वदेवस्य।८। प्र शर्धायेत्याग्नि-मारुते।९। सप्रात ऊर्ध्वमुक्थ्यानि।१०। षोलशन्तं चतुर्थम्।११।॥२॥

पञ्चदशस्तोमं बृहत्पृष्ठं द्वितीयं।१। अग्निं दूतं वृणीमह इत्याज्यं व्यूल्हे।२। त्वं हि क्षैतवदिति समूल्हे सर्वत्रोत्तमां परिधाप्य।३। गार्त्समदः प्रउगः।४। वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आ गहीत्येका[5] शुक्रस्याद्येत्येकोभा देवा दिविस्पृशेति द्वे[6] अयं वां मित्रावरुणेति चत्वारि तृचान्युत[7] स्या नः सरस्वती घोरेति प्रउग-तृचानि।५।[8] विश्वानरस्य व इन्द्र इन्द्रसोमपा इति मरुत्वतीयस्य प्रतिपदनुचरौ।६।[9] उत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्यः प्रगाथः।७।[10] इन्द्र सोमं सोमपत इति मरुत्वतीयम्।८।[11] या त ऊतिरिति निष्केवल्यम्।९।[12] इन्द्रौजस्विन्नोजस्वी त्वं देवेष्वसोजस्व्यहं मनुष्येषु भूयासमित्यतिपाद्यं भक्षयति।१०।[13] विश्वो देवस्येति वैश्वदेवस्य प्रतिपत्।११।[14] अस्य हि स्वयशस्तरमित्युत्तरे।१२।[15] आ विश्वदेवमित्य-नुचरः।१३।[16] तद्देवस्य ते हि द्यावापृथिवी यज्ञस्य व इति वैश्वदेवे विकारः।१४।[17] वृष्णस्य वृष्णो वृष्णे शर्धाय नू चित्सहोजा इत्याग्नि-मारुते।१५।[18] ॥३॥

सप्तदशस्तोमं वैरूपपृष्ठं तृतीयम्।१। सुष्वा हि देवहूतमानि-त्याज्यं व्यूल्हे।२। त्वमग्ने वसूनिति समूल्हे सर्वत्रोत्तमां परिधाप्य।३। औष्णिह आत्रेयः प्रउगः।४। वायवा याहि वीतय इत्येका[5] वायो याहि शिवेति द्वे इन्द्रश्च वायवेषां सुतानामिति द्वे[6] अयं सोमश्च-मू सुत इत्येका मित्रे वरुणे[8] अश्विनावेह गच्छतमा याह्यद्रिभिः[10]

सजूर्विश्वेभिर्देवेभिर्हत नः प्रियेति प्रउगशस्त्राणि।[11] ५।[12] तं तमिद्वस इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ।[13] ६। प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः प्रगाथः।[14] ७। अयमेति मरुत्वतीयम्।[15] ८। यद्याव इन्द्र यदिन्द्र यावत इति वैरूपस्य स्तोत्रियानुरूपौ प्रगाथौ।[16] ९। इन्द्र त्रिधातुमिति सामप्रगाथः।[17] १०। अहं भुवं यो जात इति निष्केवल्यम्।[18] ११। सूर्यं भ्राजस्विन्भ्राजस्वी त्वं देवेष्वसि भ्राजस्व्यहं मनुष्येषु भूयासमित्युत्तिष्ठन्नं भक्षयति।[19] १२। अभि त्वा देवेत्यनुचरः।[20] १३। उदु ष्य देवः सविता हिरण्यया घृतवती भुवनानामिति इत्थावन्तो जातः परावत इति वैश्वदेवे विकारः।[21] १४। वैश्वानराय धिषणां धारावराऽस्त्वमग्ने प्रथमो अङ्गिरा ऋषिरित्याग्निमारुते।[22] १५। ॥४॥

एकविंशस्तोमे वैराजपृष्ठं चतुर्थम्।१। आग्निं न स्ववृक्तिभिरित्याज्यं सूक्तं[2] अग्निं नर इति समूळ्हे।[3] २। आनुष्टुभः प्रउगः।[4] ३। वायो शुक्रो अयामि त इत्येका[5] वि हि होत्रा इति द्वे[6] इन्द्रश्च वायवेषां सोमानां यच्चिकेतो गो विश्वाभिरूतिभिर्[8] त्वा गिरो[10] उपत्यमित्येका[11] यूयं हि ष्ठेति द्वे[12] इयमददादिति प्रउगशस्त्राणि।[13] ४। प्र णो देवीति समूळ्हे।[14] ५। तं त्वा यज्ञेभिरिति प्रतिपन्मरुत्वतीयस्य।[15] ६। ये त्र्यचस्य प्रथमस्य त उत्तरस्यानुचराः समाह्णस्त्याः।[16] ७। अधीन्द्र मिन्द्र[17] मरुत्व इमं नु मायिनमिति इत्थाविति[18] मरुत्वतीयम्।[19] ८। पिबा सोममिन्द्र मन्दतु त्वेति वैराजस्य स्तोत्रियानुरूपौ न्यूङ्खम्।[20] ९। मध्यमस्य पादस्य द्वितीयसप्तमयोरक्षरयोर्दिव्यूर्वं हिङ्कारमित्यानुष्टुभः।[21] १०। यं तो३ ओ३ सुवाव इर्यो३ ओ३ याद्रि-

रिति ।[22]११। द्वितीये ऽक्षरे द्वादशकृत्व एकैकं दीर्घं ह्रस्वांस्त्रींस्त्री-नन्तरेणेति वैराजः ।[23]१२। यं नो सुषावेति ।[24]१३। द्वितीयचतुर्थयो-रुत्तरयोः प्रतिगरस्यानुष्टुभः प्रतिन्यूङ्खाः ।[25]१४। द्वितीये वैराजः ।[26]१५। ओथामो३ ओ३ मोदामो३ ओ३ इवेति ।[27]१६। ओथामो मोदैवेति ।[28]१७। इन्द्रमिद्देवतातय इति सामप्रगाथः ।[29]१८। तुभ्येदिमेति तिसृणां पूर्वयोर्न्यूङ्खाः ।[30]१९। कुह श्रुतो यभस्य ते त्यमु वः सत्रासाहमिति तिस्र इति निष्केवल्यम् ।[31]२०। द्वितीयादह्नः प्रतिपत् ।[32]२१। हिरण्य-पाणिमित्यनुचरः ।[33]२२। आ देवो यातु सविता सुरत्नः प्र द्यावा यज्ञैः पृथिवी नमोभिः प्र ऋभुभ्यः प्र शुक्रैतु देवीति वैश्वदेवे विकारः ।[34]२३। प्र सम्राजः क ईं व्यक्ता उवे वः शुचेत्मानमित्याग्नि-मारुते ।[35]२४। ॥५॥

त्रिणवस्तोमं शाकरपृष्ठं षष्ठमहः ।१। इममू ष्विति नवर्चमाज्यं थूल्हे[2] ऽग्निं नं मन्य इति समूल्हे ।[3]२। तस्य प्रथमार्धे पदमवगृह्य पदमवगृह्य द्वे अवराध्येकेन प्रणौति ।[4]३। पङ्क्तिशंसं परः ।[5]४। बार्हतः प्रउगः ।[6]५। आ नो यज्ञं दिविस्पृशमिति द्वे आ नो वायवित्येका[7] वां सहस्रमिति तिस्र[8] अधगित्येति द्वे प्र मित्रायेत्येकेना[9] उ वां दिविष्टय[10] आ नो विश्वा सुहव्यो[11] देवं देवं वो ऽवसे देवं देवमभि-[12]ष्टमदद्दादिति प्रउगतृचानि ।[13]६। उत स्या नः सरस्वती घोरेति समूल्हे ।[14]७। यत्पाञ्चजन्ययेति मरुत्वतीयस्य प्रतिपत् ।[15]८। इत्था हि सोम इन्मदे ऽवितासि मरुत्वाँ इन्द्र वृषभो ऽयं ह येनेति तिस्र इति मरु-त्वतीयम् ।[16]९। महानाम्न्यः स्तोत्रियः ।[17]१०। यथा तिस्रो ऽनुष्टुभस्त्र्यैकैका ।[18]११। उत्तमायाः पङ्क्तिरुत्तमा ।[19]१२। उत्तमार्धे च पञ्च

पदानि पङ्क्तः पुरीषमित्याचक्षते तन्निविच्छंसम्।१३।[20] प्रत्यस्मै पिपी-
षते यो रयिवो रयिंतमस्त्वमु वो अप्रहणमिति त्र्यस्तृचा अस्मा
अस्मा इति दशम्येवा ह्यसि वीरयुरिति वा यो ऽनुरूपः।१४।[21]
यदिन्द्र नाहुषीष्वेति सामप्रगाथः।१५।[22] इन्द्रो मदाय प्रेदं ब्रह्मा-
भुरेकस्तमिन्द्रं वाजयामसीति तिस्र इति निष्केवल्यम्।१६।[23] तत्सवितुर्व-
रेण्यमित्यनुचरः।१७।[24] उदु ष्य देवः सविता दमूना इति तिस्रो
मही द्यावापृथिवी इति चतस्र ऋभुर्विभ्वा को नु वां मित्रावरुणौ
प्र शंतमेति वा वैश्वदेवे विकारः।१८।[25] हविष्पान्तं वपुर्म्यग्निर्होता
गृहपतिरिति तिस्र इत्याग्निमारुते।१९।[26] मूर्धानमस्मा रुद्राय इममू
ष्विति नवेति समूल्हे।२०।[27] ॥६॥

त्रयस्त्रिंशस्तोमं रैवतपृष्ठं षष्ठम्।१। नित्याभिर्याज्याभिः पारु-
च्छेपीः संधाय यजन्ति।२। आ त्वा जुव आ वां धिय इत्यैन्द्रवा-
यवस्य पुरोनुवाक्ये।३। स्तीर्णं बर्हिरा वां रथ इति याज्ये।४।
सुषुमेति मैत्रावरुणस्य पुरोनुवाक्योत्तरा याज्या।५। युवां स्तोमे-
भिरित्याश्विनस्य पुरोनुवाक्योत्तरा याज्या।६। हुपमिन्द्र तां वां
धेनुं विश्वेषु हि त्वा मो षु वो अस्मदा यज्ञः पत्नीस्ता नो रायश्चिति
नेष्टुर्द्विपदा त्रिष्टुप्चाग्निं होतारं दध्यङ् हेति प्रातःसवने प्रस्थितानां
यजन्ति।७। तुभ्यं हिन्वान इति शुक्रयोरेकैकोर्ध्वमृतुप्रैषेभ्यः।८।
स्वयं यजतो ऽध्वर्युर्गृहपतिश्च।९। चित्यस्य पश्चादुपविश्याध्वर्युः
शालामुखीयस्य गृहपतिः।१०। पिबा सोममिन्द्र सुवानमिन्द्राय
हि द्यौस्त्वया वयं मघवन्पाहि न इन्द्र नू इत्था ते ऽवमंह इन्द्र
वनोति हि सुन्वन्निति माध्यन्दिने[11] विकारः।११। उत माता

इहद्दिवेति नेष्टुस्तृतीयसवने ।१२। अनवानन्तो यजन्ति ।१३। ऐका-
हिकीभिर्वा ।१४। ॥७॥

अयं जायतेत्याज्यम् ।१। आतिच्छन्दसः प्रउगः ।२। सोषं
यद्दिरा[3] वां रथो[4] ऽयं मित्राय[5] युवां स्तोमेभिर्देवयन्त[6] इन्द्रेत्येका[7] ऽव-
र्मंह इन्द्रेति द्वे[8] ओ षु णो अग्न[9] इयमददादिति प्रउगरूपाणि ।[10]३।
उत नः प्रियेति समूल्हो ।[11]४। स पूर्व्य इति प्रतिपन्मरुत्वतीयस्य ।[12]५।
यं त्वं रथं स यो वृषा मरुत्वाँ इन्द्र मीढ्व इति तिस्र इति मरुत्व-
तीयम् ।[13]६। रेवतीर्नो रेवाँ इद्रेवत इति रैवतस्य स्तोत्रियानुरूपौ
।[14]७। मा चिदन्यद्विति मामप्रगाथः ।[15]८। एन्द्र याह्युप न प्र घा न्वस्योप
म्रो हरिभिरिति तिस्र इति निष्केवल्यम् ।[16]९। अभि त्यं देवमिति
प्रतिपद्वैश्वदेवस्य ।[17]१०। तस्याः षोडशाक्षरेण विरम्याष्टादशाक्षरेण
प्रणुत्य पञ्चदशाक्षरेणावसाय पञ्चदशाक्षरेण ।[18]११। अस्य हि स्वय-
शस्तरमित्युत्तरे ।[19]१२। तृतीयादक्षरो ऽनुचरः ।[20]१३। उदु ष्य देवः
सविता सवाय[21] कतरा पूर्वा[22] किमु श्रेष्ठ[23] इदमित्येतत्सूक्ते परि-
शिष्य ये यज्ञेनेति सूक्ता परिशिष्टे शंसतीति वैश्वदेवे विकारः
।[24]१४। अश्वस्य कृष्णं[25] प्रयज्यव[26] इमं स्तोममित्याग्निमारुते ।[27]१५।
मध्यमात्प्रभृत्याग्निष्कैवल्यमरुत्वतीययोरुत्तमांस्तृचानसमूल्ह उद्धरति ।
[28]१६। स्वस्ति नो मिमीतामिति च तिस्रो ऽन्ते वैश्वदेवानां
करोति ।[29]१७। ततं म इत्याभवं चतुर्थस्य ।[30]१८। प्र यन्तु वाजा
इति च तिस्रो ऽन्ते मारुतस्य ।[31]१९। वसुं न चित्रमहसमिति
जातवेदसीयम् ।[32]२०। परोक्षपृष्ठस्य बृहद्रथन्तरपृष्ठस्योपाश्वपृष्ठस्या-
पक्षपृष्ठस्य मनुपृष्ठस्य छन्दोहद्सोमस्य च छन्दोगयज्ञेन सोचिया-

नुरूपान्सामप्रगाथांय । २१[33] । समानमन्यसमूल्हेन । २२[34] । तथा विश्वजिति । २३[35] । ॥ ८ ॥

चतुर्विंशस्तोमं बृहत्पृष्ठमुभयसाम सप्तमम् । १ । प्र वः शुक्रायेत्याज्यम् । २ । त्रैष्टुभः प्रउगः । ३ । प्र वीरया[4] ते मर्येनोदा[5] वज्रं[6] गोमता[7] नो देव[8] प्र वो यज्ञेषु[9] प्र वोद्देवेति प्रउगतृचानि । ४[10] । ते त्र्यहस्य प्रथमस्य प्रतिपदनुचराः सब्राह्मणस्यास्ते छन्दोमेषु स्वरसामस्वभिप्लवे च । ५[11] । प्रथमादेव प्रथमस्याछान्दोमिकस्य । ६[12] । द्वितीयाद्द्वितीयस्य । ७[13] । तृतीयात्तृतीयस्य । ८[14] । एवं त्र्यहस्य पूर्वस्याभिप्लविकस्य । ९[15] । एवमुत्तरस्य । १०[16] । एवं स्वरसाम्नाम् । ११[17] । कया शुभा त्वं सुमेषमिति मरुत्वतीयम् । १२[18] । तमु ष्टुह्यभि त्वं मेषमिति निष्केवल्यम् । १३[19] । न कण्वरथन्तरस्य योनिमनुशंसेत् । १४[20] । ये प्रथमयोरह्नोः प्रतिपदनुचरा वैश्वदेवस्य ते छन्दोमेष्वभिप्लवे च । १५[21] । तत्सवितुर्वरेण्यं प्रेता यज्ञस्यायं देवायेति तृचानुशंसतीति पद्वा यदि वनवा वहीमानशुश्रवणोऽथ इति तिस्र इति वैश्वदेवे विकारः । १६[22] । वैश्वानरो न ऊतये ।

वैश्वानरो न आ गमदिमं यज्ञं सजूरुप ।
अग्निरुक्थेन वाहसा ॥
वैश्वानरो अङ्गिरसां स्तोमं यज्ञं ■ जोशनत् ।
ऐषु द्युम्नं स्वर्यमत् ॥

प्र यदस्त्रिष्टुभमिति पञ्चदश नव वाचंनन्त्वेत्याग्निमारुते । १७[23] । ॥ ९ ॥

चतुश्चत्वारिंशस्तोमं रथन्तरपृष्ठमष्टमम् । १ । अग्निं वो देवमित्याज्यम् । २ । त्रैष्टुभः प्रउगः । ३ । कुविदङ्गेति प्रथमाद्दतीये[4] आ

वायो भूषेति चैका[5] यावत्तर:[6] प्रति वां सूर उदिते[7]ऽप खसुरेयं बोम:[9] प्र ब्रह्माण[10] उत स्या नः सरस्वती जुषाणेति प्रउगशस्त्राणि । [11]४ । महाँ इन्द्रो नृवदिमा उ त्वा पुरुतमस्य का स्य वीर इति सर्वत्र चतस्र उत्तमाः परिहाप्य महश्चित्त्वमस्य द्यावापृथिवी इति मरुत्वतीयम् । [12]५ । त्वं महाँ इन्द्र तुभ्यं इत्थं महाँ इन्द्र यो द्यापूर्व्या तां सु ते कीर्तिमिमां ते धियमिति निष्केवल्यम् । [13]६ । हिरण्यपाणिमूतय इति चतस्रो[14] मही द्यौर्युवाना पितरेति तथो[15] देवानामिदिमा[16] नु कं[17] विश्वे देवा ऋतावृध इति तिस्र इति वैश्वदेवे विकारः । [18]७ ।

वैश्वानरो अजीजनदग्निर्नो नव्यसीं मतिम् ।
क्ष्मया वधान ओजसा ॥
त्वया पावक दीदिद्यग्ने वैश्वानर द्युमत् ।
जमदग्निभिराहुतः ॥

ऋतावानं वैश्वानरं[19] कद्रु नूनं कधप्रियो[20] दूतं वो विश्ववेदसमित्याग्निमारुते । [21]८ । ॥१०॥

अष्टाचत्वारिंशस्तोमं बृहत्पृष्ठं नवमम् ।१। अगन्म महा वोमस्य मा तवसमित्याज्यम् ।२। पूर्वं वा ।३। त्रैष्टुभः प्रउगः ।४। आ वायो भूषेति प्रथमातृतीये चोत्तमा च[5] द्वितीयाचतुर्थ्यौ पार्वन्तो न श्रवस इति च[6] दिवि क्षयन्ता[7] विश्ववारैर्[8] नर[9] ऊर्ध्वो अग्निः[10] प्र चोदमेति प्रउगशस्त्राणि । [11]५ । अयमेन्द्रो रथाय तिष्ठा हरी गायत्साम प्र मन्दिन इति मरुत्वतीयम् । [12]६ । आ सत्यो यातु मघवा, इदु श्रोनं य इन्द्र नत्त इन्द्रियमचं सुवं विश्वजित इति

निष्केवल्यम् । [13] ७ । अभि त्वा देव प्र वां महि द्यवी इति तृचा-[14] विन्द्र इष इत्येका ते नो रत्नानीति द्वे[15] अग्निरुक्थ इतिप्रभृति पञ्च मनोः सूक्तानि[16] ये त्रिंशतीत्युपोत्तमामुद्धृत्य[17] न हि वो अस्त्यर्भक इत्येका[18] उपमेति चतस्रो[19] बभ्रुरेक इति वा मनुप्र-वल्हौ[20] विश्वे देवास आ गतेति तृचं भारद्वाजमिति वैश्वदेवे विकारः । [21] ८ ।

दिवि पृष्टो अरोचताग्निर्वैश्वानरो बृहन् ।

ज्योतिषा बाधते तमः ॥

स विश्वं प्रति चाक्लृपदृतूनुत्सृजते वशी ।

यज्ञस्य वय उत्तिरन् ॥

अग्निः परेषु धामसु[22] मरुतो यस्याग्निर्होता पुरोहित[23] [24] इत्याग्निमारुते । [25] ९ । यानि त्र्यहस्य प्रथमस्य प्रातःसवनतृतीय-सवनानि तानि समूळ्हे छन्दोमानाम् । [26] १० । निष्केवल्यमरुत्व-तीययोश्च जागतान्युत्सृजति । [27] ११ । स यो वृषेति पञ्चदशोर्ध्वं कया-शुभीयात् । [28] १२ । यो जात इति तमुद्दीयात् । [29] १३ । इन्द्रद्वय-न्तरपृष्ठे द्विसूक्ताः सर्वे । [33] १४ । ॥११॥

अविवाक्यं चतुर्विंशस्तोमं द्वयमहः । १ । त्रयस्त्रिंशमग्निष्टोमसाम । २ । त्रिकं मानसम् । ३ । वामदेव्यस्य योनौ रथन्तरं पृष्ठम् । ४ । अप्रतिभायामन्यः स्वाध्यायम् । ५ । उद्धृत्यानुष्टुभमितरेषां छन्दसां संपदानुष्टुभां पञ्चदशं सहस्रमेकस्मिन्सवनीये । ६ । द्वात्रिंशतं गायत्र्यः । ७ । अग्निं नरः प्रति क्षा सुनर्या शुधेति तृचानुष्टुभां स्थाने । ८ । चतुर्विंशतिं त्रिष्टुभः । ९ । तथा जगत्यः । १० । पञ्चदश

प्रगाथान् ।११। श्रौष्णिहांश्च तृचान्पञ्चदश ।१२। पाङ्क्तानि च ।१३। अनुष्टुभां प्रातरनुवाकः पञ्चदशे शते ।१४। तृतीयाचतुर्थौ स्तोत्यानामुद्धृत्याभि प्रवन्तीति द्वे ।१५। अच्छा नः शीरशोचिषमिति तिस्रो ऽच्छा वो अग्निमवस इत्येतासां स्थाने ।१६। प्रति श्रुतायेति तिस्रः प्रत्यस्मै पिपीषत इत्येतासां स्थाने ।१७। ॥१२॥

अग्ने नमस्येत्याज्यम् ।१। तस्य प्रथमायां पञ्चाक्षरेण विगृह्य द्वाभ्यां पञ्चाक्षराभ्यामवसाय द्वाभ्यां प्रणौति ।२। माधुच्छन्दसः प्रउगः ।३। द्वाविंशतिं गायत्र्यः ।४। स्वजामो वारे पवमानो अव्यय इति यावत्सुतो याथाकाम्यम् ।५। उष्णिहश्चोशत्येवेकोष्णिहतावपश्यतीत्येतस्याः स्थाने ।६। त्रिकद्रुकीया प्रतिपन्मरुत्वतीयस्य ।७। तस्याः षोडशाक्षरेण विगृह्य षोडशाक्षरेण प्रणुत्य षोडशाक्षरेणावसाय षोडशाक्षरेण ।८। तुविशुष्मेत्युत्तरे ।९। इन्द्रविन्द्रायेति सूक्तात्पूर्वौ प्रगाथौ पिबन्त्यपीयया संशंसतीति मरुत्वतीयम् ।१०। वामदेव्यस्य स्तोत्रियानुरूपौ प्रस्तोर्ध्वं धाय्याया ऊर्ध्वं प्रगाथं स्तोत्रियानुरूपौ च ।११। सखाय आ शिषामहीति नव ।१२। आ धूर्ष्वस्मै वज्रमेक इति च द्विपदे ।१३। हैरण्यस्तूपीयं च ।१४। माध्यैरण्यस्तूपीयात्प्रगाथेन संशंसति ।१५। इति निष्केवल्यम् ।१६। षष्ठात्पतिपदनुचरौ वैश्वदेवस्य ।१७। पुरस्ताद्यानोभद्रीयात्पञ्चर्क्षीयमिति वैश्वदेवे विकारः ।१८। उरु विष्णवित्युद्धृत्य भवा मित्र इति यजति ।१९। अग्निं नर इत्यग्निष्टोमसामः स्तोत्रियानुरूपौ ।२०। आयं गौर्मंदी द्यौरिति स्तोत्रियानुरूपौ ।२१। तं प्रत्नथेति जयोद्य ।२२। यज्ञो मन्द्रवेति

परिधाय ।२२। प्रजापत इति यजति ।२३। उक्थ्वीराहावो व्याख्यातः ।२४। इति समूल्हे अतिरिक्तोक्थम् ।२५। पुरा पत्नी-संयाजेभ्यः संस्थाप्य वा गार्हपत्ये जुत्वा पूर्वया द्वारा सदः प्रपद्य स्वस्य धिष्ण्यस्य पश्चादुपविश्य मानसेन स्तुत आयं गौरिति सार्प-राज्ञीः पराङुपांश्वप्रस्तुवन् ।२६। अध्वर्योऽ३ इत्यामन्त्रितो होतर्थि होतरिति सर्वत्र प्रतिगृणीति ।२७। ओं होतस्तथा होतरित्याच-क्षाणे ऽनुगृणाति ।२८। ॥१३॥

अध्वर्योऽ३ इति दशहोतारं वदिष्यन् ।१। प्रजापतिरकाम-यत बहुः स्यां प्रजायेय सर्वं वेदमनुष्याद्यदिदं किंचेति [2] स एतं दशहोतारं यज्ञक्रतुमपश्यदग्निहोत्रम् ।[3]। इत्युक्त्वाथोपांशु ।[4]। चित्तिः स्रुक् [5] चित्तमाज्यम् [6] वाग्वेदिः [7] आधीतं बर्हिः [8] केतो अग्निः [9] विज्ञातमग्नीत् [10] वाचस्पतिर्होता [11] मन उपवक्ता [12] प्राणो हविः [13] सामाध्वर्युः [14] इति होतारः ।[15]। अथ यद्वः ।[16]। वाचस्पते हृदिधेनामन् [17] वाचस्पतिः सोममपाद्य अस्मासु नृम्णं [18] धाः ।[19]। इत्युपांशु ।[20]। तेन देवाम्मनुष्यानसुरानित्येतांस्त्रयानजन-यत्प्रजापतिः [21] स येवा वा एवंविदान्होता भवति [22] प्र वै स होता प्रजया पशुभिर्जायते [23] प्र ते यजमानाः प्रजया पशुभि-र्जायन्ते येषामेवंविदान्होता भवती[24]ति ।[25]। ॥१४॥

अध्वर्योऽ३ इति चतुर्होतारं वदिष्यन् ।१। ते दया एवान्वाहृत्ता आसन्देवाय मनुष्याय [2] पराञ्चो ह्यस्मादसुरा आसन्सो ऽकाम-यत वीरो मे जायेत येनेमानसुरानभिभवेयमिति [3] स एतं चतुर्होतारं यज्ञक्रतुमपश्यद्दर्शपूर्णमासौ ।[4]। इत्युक्त्वाथोपांशु ।[5]।

पृथिवी होता [6] द्यौरध्वर्युः [7] त्वष्टाग्नीत् [8] मित्र उपवक्ता [9] इति होतारः। [10] ४। अथ ग्रहः। [11] ५। वाचस्पते वाचो वीर्येण संभृततमेनाय-क्ष्यसे [12] यज्ञपतये वसु वार्यमासंस्करसे [13] वाचस्पतिः सोमं पिबतु [14] जजनदिन्द्रमिन्द्रियाय स्वाहा। [15] ६। इत्युपांशु। [16] ७। तेनेन्द्रं वीरमजनयन्तत एनानसुरानभ्यभवत्प्रजापतिः [17] स येषां वा एवंविद्वान्होता भवति [18] आ वै तस्य होतुर्वीरो जायते [19] आ तेषां यजमानानां वीरा जायन्ते [20] अभि वै स होता द्विषन्तं भ्रातृव्यं भवति [21] अभि ते यजमाना द्विषतो भ्रातृव्यान् भवन्ति येषामेवंविद्वान्होता भवतीति [22]। ८ [23]। ॥१५॥

अध्वर्यो इ इति पञ्चहोतारं वदिष्यन्। १। तस्मा इन्द्राय देवता ज्यैष्ठ्याय श्रैष्ठ्याय नातिष्ठन्त [2] स एतं पञ्चहोतारं यज्ञक्रतु-मपश्यत्तामुमाहरत्। [3] २। इत्युक्त्वाथोपांशु। [4] ३। अग्निर्होता [5] अश्विनावध्वर्यू [6] रुद्रो अग्नीत् [7] बृहस्पतिरुपवक्ता [8] इति होतारः। [9] ४। अथ ग्रहः। [10] ५। वाचस्पते अच्छिद्रया वाचाच्छिद्रया जुह्वा [11] दिवि देवा वृधन्होत्रामैरयस्व। [12] ६। इत्युपांशु। [13] ७। ततो वा इन्द्राय देवता ज्यैष्ठ्याय श्रैष्ठ्यायातिष्ठन्त [14] स येषां वा एवंविद्वान्होता भवति। तिष्ठते वै तस्मै होत्रे स्वाः श्रैष्ठ्याय [15] तिष्ठन्ते तेभ्यो यजमानेभ्यः स्वाः श्रैष्ठ्याय येषामेवंविद्वान्होता भवतीति [16]। ८ [17]। ॥१६॥

अध्वर्यो इ इति षड्ढोतारं वदिष्यन्। १। सो ऽकामयतान्नादः स्यामन्नपतिरिति [2] स एतं षड्ढोतारं यज्ञक्रतुमपश्यत्पशु-बन्धम्। [3] २। इत्युक्त्वाथोपांशु। [4] ३। सूर्यस्ते चक्षुः [5] वायुः प्राणः। अन्तरिक्षमात्मा [6] यज्ञो गात्राणि [7] द्यौः पृष्ठम् [8] पृथिवी शरी-

रम्[9] । इति होतारः[10] ।४। अथ यज्ञः[11] ।५। सोमः सोमस्य पिबतु शुक्रः शुक्रस्य पिबतु[12] । श्रातास्त इन्द्र सोमा वातापे हवनश्रुतः । [13]।६। इत्युपांशु[14] ।७। ततो वै सो ऽन्नादो ऽन्नपतिरासीत्[15] । स येषां वा एवंविद्वान्होता भवति[16] । अन्नादो वै स होतान्नपतिर्भवति[17] । अन्नादास्ते यजमाना अन्नपतयो भवन्ति येषामेवंविद्वान्होता भवती[18]ति[19] ।८। ॥१७॥

अध्वर्योश्च इति सप्तहोतारं वदिष्यन् ।१। ते देवा अकामयन्त कॢप्ताः कॢप्तेषु लोकेषु स्यामेति[2] । त एतं सप्तहोतारं यज्ञक्रतुमपश्यन्सौम्यमध्वरम् [3]।२। इत्युक्त्वाथोपांशु [4]।३। महाहविर्होता[5] । सत्यहविरध्वर्युः[6] । अचित्तपाजा अग्नीत्[7] । अचित्तमना उपवक्ता[8] । अनाधृष्यश्चाप्रतिधृष्यश्चाभिगरौ[9] । अयास्य उद्गाता[10] । इति होतारः [11]।४। अथ यज्ञः [12]।५। वाचस्पते विधेनामन्विधेम ते नाम[13] । विधेस्त्वमस्माकं नाम[14] । मा देवानां तन्तुश्छेदि मा मनुष्याणाम्[15] । सजूर्दिवा पृथिव्योपहूतः सोमस्य पिब स्वाहा [16]।६। इत्युपांशु [17]।७। ततो वै तेभ्यो ऽकल्पत[18] । ते देवाः कॢप्ताः कॢप्तेषु लोकेष्वासन्[19] । अथयद्य कॢप्ताः कॢप्तेषु[20] । स येषां वा एवंविद्वान्होता भवति[21] । कल्पते वै तस्मै होत्रे योगक्षेमः[21] । कल्पते तेभ्यो यजमानेभ्यो योगक्षेमः[22] । अभि वै स होता स्वर्गं लोकमश्नुते प्रत्यस्मिंल्लोके प्रतितिष्ठति[23] । अभि ते यजमानाः स्वर्गं लोकमश्नुवते प्रत्यस्मिंल्लोके प्रतितिष्ठन्ति येषामेवंविद्वान्होता भवती[24]ति [25]।८। ॥१८॥

तनूरतो वदति ।१। अध्वर्यो येषां वा अन्नादीं प्रजापतेस्तन्वं विद्वान्होता भवत्यन्नादो वै स होता भवत्यन्नादास्ते यज-

माना भवन्ति [2] अध्वर्यो येषां वा अवपत्नीं प्रजापतेस्त्वं विद्वान्होता भवत्यनपतिर्वै स होता भवत्यनपतयस्ते यजमाना भवन्ति [3] अध्वर्यो येषां वै भद्रां प्रजापतेस्त्वं विद्वान्होता भवति भद्रं वै तस्मै होत्रे भवति भद्रं तेभ्यो यजमानेभ्यो भवति [4] अध्वर्यो येषां वै कल्याणीं प्रजापतेस्त्वं विद्वान्होता भवति कल्याणं वै तस्मै होत्रे भवति कल्याणं तेभ्यो यजमानेभ्यो भवति [5] अध्वर्यो येषां वा अनिलयां प्रजापतेस्त्वं विद्वान्होता भवत्यनिलयो वै स होता भवत्यनिलयास्ते यजमाना भवन्ति [6] अध्वर्यो येषां वा अपभयां प्रजापतेस्त्वं विद्वान्होता भवत्यभयं वै तस्मै होत्रे भवत्यभयं तेभ्यो यजमानेभ्यो भवति [7] अध्वर्यो येषां वा अनाप्तां प्रजापतेस्त्वं विद्वान्होता भवत्यनाप्तो वै स होता भवत्यनाप्तास्ते यजमाना भवन्ति [8] अध्वर्यो येषां वा अनाप्यां प्रजापतेस्त्वं विद्वान्होता भवत्यनाप्यो वै स होता भवत्यनाप्यास्ते यजमाना भवन्ति [9] अध्वर्यो येषां वा अनाधृष्टां प्रजापतेस्त्वं विद्वान्होता भवत्यनाधृष्टो वै स होता भवत्यनाधृष्टास्ते यजमाना भवन्ति [10] अध्वर्यो येषां वा अनाधृष्यां प्रजापतेस्त्वं विद्वान्होता भवत्यनाधृष्यो वै स होता भवत्यनाधृष्यास्ते यजमाना भवन्ति [11] अध्वर्यो येषां वा अपूर्वां प्रजापतेस्त्वं विद्वान्होता भवति न वै तस्माद्धोतुरन्यः पूर्वो भवति न तेभ्यो यजमानेभ्यो ऽन्ये पूर्वे भवन्ति [12] अध्वर्यो येषां वा अभ्रातृव्यां प्रजापतेस्त्वं विद्वान्होता भवत्यभ्रातृव्यो वै स होता भवत्यभ्रातृव्यास्ते यजमाना भवन्ति येषामेवंविद्वान्होता भवती[13]ति । २[13] । ॥ १९ ॥

गृहपतिरतो गृहपतिवदनम् ।१। अध्वर्यो येषां वै गृहपति-
र्गृहपतिं विद्वान्गृहपतिर्भवति[2] राध्नोति वै स गृहपती राध्नुवन्ति
ते यजमानाः[3] । अध्वर्यो[4] येषां वा अपहतपाप्मानमेवंविद्वान्गृह-
पतिर्भवत्यप[5] वै स गृहपतिः पाप्मानं हते[6] ऽप ते यजमानाः
पाप्मानं घ्नते[7] येषामेवंविद्वान्गृहपतिर्भवती[8]ति ।२[9]। ॥२०॥

प्रजापत इति मनसा यजति ।१। मनसा वषट्करोति ।२।
मनसानुवषट्करोति ।३। मनसा भक्षः ।४। मनसैवोरोऽभिमर्श-
नम् ।५। औदुम्बरीमन्वारभन्ते ऽग्रेण धिष्ण्यानासीनाः ।६। पलाश-
शाखाभिर्ये मानिकामेयुः ।७। उत्तमौ पाली होता कुर्वीत ।८।
उत्तमो ऽसानीति ।९। अपिधाय सदसो द्वारौ शालायाश्चा-
ध्वर्युर्वाचमुपाकरोति । वाग्यताः संमीलयासत आ नक्षत्राणां दर्श-
नात् ।१०। नक्षत्रेषु दृश्यमानेषु मार्जालीयदेशे तच्चतुरिति नक्ष-
त्रेषु वाचं विसृजन्ते ।११। सर्वे सान्वो निधनमुपेत्योत्तरस्य हविर्धान-
स्याधो ऽक्षं सर्पन्ति ।१२। उत्तरस्योत्तरेण वा ।१३। पूर्व-
मिन्द्रापर्वतेत्यस्तवेलायां जपित्वापेण हविर्धाने समुपविश्य कामा-
न्ध्यायन्ते यत्कामा भवन्ति ।१४। ये बहुकामा भूर्भुवः स्वरित्ये-
तास्ते व्याहृतीर्जपेयुः ।१५। ते प्राञ्च उदञ्च उत्क्रम्य वाचं विसृजन्ते
वागैतु वागुपैतु वागुप मैतु वागिति ।१६। सुब्रह्मण्यामसीकं चित्रपा-
श्वभिव्याहृत्य वाचं विसृजन्ते ।१७। अत्र द्वादशाहः संतिष्ठते ।१८।
कालवादो वा कालवादो वा ।१९। ॥२१॥

इति शाङ्खायनसूत्रे दशमो ऽध्यायः समाप्तः ।

## ओम् ।

---

व्याख्यातो द्वादशाहः प्रकृतिः सत्त्राहीनानाम् ।१। अयन-
लक्षणो विकारः ।२। द्विरात्रप्रभृतयो ऽहीना द्वादशाहपर्यन्ताः ।३।
द्वादशाहप्रभृतीनि सत्त्राणि ।४। अहीनेषु प्रायणीयो न विद्यते
।५। सत्त्रधर्माश्च ।६। ॥१॥

चतुर्विंशस्तोमं बृहत्पृष्ठमुभयसामाग्निष्टोम उक्थ्यं वा चतुर्विंश-
मित्याचक्षते ।१। होताजनिष्टेत्याज्यम् ।२। माधुच्छन्दसः प्रउगः
।३। कयाशुभीयं मरुत्वतीयम् ।४। अनुत्तमा न इति परिधा-
नीयोत्तराः पूर्वाः शस्त्वा यत्रास्मिन्धीयते निवित् ।५। तदिदासीयं
निष्केवल्यम् ।६। द्वितीयास्थानि द्यावापृथिवीये ।७। वैश्वदेवमारुते
च ।८। आर्भवं षष्ठात् ।९। वैश्वानरीयं तृतीयात् ।१०। यज्ञेन
वर्धतेति जातवेदसीयम् ।११। सामान्यतुक्थ्यः ।१२। यज्ञाय-
ज्ञीयस्य स्तोत्रियेणोक्थ्यस्तोत्रियान्व्याख्यास्य ।13। अनुरूपेणानुरूपान् ।14।
ऋचे मरुद्भिर्ऋक्वभिः पा इन्द्रावरुणाभ्यां मत्स्वेन्द्राबृहस्पतिभ्यामि-
न्द्राविष्णुभ्यां मजूरिति शस्त्वा परिदधाति ।१५। षष्ठान्तदुक्थ्य
एतया शस्त्वा यजेत् ।१६। ॥२॥

एकत्रिके तृचकॢप्तं शस्त्रम् ।१। यथास्तुतं स्तोत्रियान्छस्त्वा
तृचान्वा ।२। यथास्तोत्रियमनुरूपान्सामप्रगाथांश्च शस्त्वा ।४। पर्यासा-
नासुत्तमांसूचाप्येचकाः शंसन्ति ।५। निविद्धानानां होता ।६।
सर्वमन्यत्प्रकृत्या ।७। ॥३॥

अभिप्लवः षळहः पृष्ठ्यविकारः ।१। यानि त्र्यहस्य प्रथमस्या-ज्यानि समूळ्हे तानि पूर्वेषामाभिप्लविकानाम् ।२। रथन्तरं बृहदिति पृष्ठे विपर्यासम् ।३। ज्योतिरग्निष्टोमः प्रथममुत्तमं च ।४। चत्वा-र्युक्थ्यानि मध्ये ।५। गां द्वितीयं चतुर्थं च ।६। आयुस्तृतीयं पञ्चमं च ।७। इन्द्रो रथायेति मरुत्वतीयम् ।८। आ याह्यर्वा-ङिति निष्केवल्यम् ।९। कथा देवानामिति वैश्वदेवम् ।१०। पञ्चमे च ।[10]११। मारुतमेकाहात् ।[11]१२। एति प्र होतेति जात-वेदसीयम् ।[12]१३। समानमन्यत्प्रथमेनाह्ना ।[13]१४। ॥४॥

इमा उ त्वेति मरुत्वतीयं द्वितीयस्य ।१। सुत इत्त्वं निमिश्ल इति निष्केवल्यम् ।२। एकाहात्त्राविषम् ।३। ततं म इत्यार्भवम् ।४। पञ्चमे च ।५। देवान्हुव इति वैश्वदेवम् ।६। चतुर्विंशा-ज्जातवेदसीयम् ।७। समानमन्यद्द्वितीयेनाह्ना ।८। ॥५॥

औष्णिहो वैश्वमनसः प्रउगस्तृतीयस्य ।१। वायो याहि शिवा[2] वां सहस्रं[3] ना वां विश्वस्था[4] वां वाजिनः[5] सखाय आ शिषामहि[6] हो देवदिदितिरुत[7] नः प्रिये[8]ति प्रउगतृचानि ।[9]२। तिष्ठा हरी इति मरुत्वतीयम् ।[10]३। एकाहान्निष्केवल्यम् ।[11]४। घृतेन द्यावापृथिवी इति ऋचम् ।[12]५। षष्ठे च ।[13]६। एकाहादार्भवं वैश्वदेवं च ।[14]७। आ रुद्रासस्त्वामग्न[15] ऋतायव[16] इत्याग्निमारुतम् ।[17]८। ॥६॥

होताजनिष्टेत्याज्यं चतुर्थस्य ।१। मेधातिथः प्रउगः ।२। ये गायत्र्यस्ते. वायव्यैन्द्रवायवे । मेधातिथ्यस्तु पूर्वाः ।३। मित्रं वयं[4] प्रातर्युजा[5] ता वहन्त्वभि[6]रम · इति तृचानि ।[7]४। यानि त्र्यहस्योत्तरस्य मारुतानि समूळ्हे तान्युत्तरेषामाभिप्लविकानाम्

।[8] ५। एकाद्यान्मरुत्वतीयम् ।[9] ६। उग्रो जज्ञ इति निष्केवल्यम् ।[10] ७। द्वितीयात्सावित्रद्यावापृथिवीये ।[11] ८। आर्भवं तृतीयात् ।[12] ९। अग्निरिन्द्र इति वैश्वदेवम् ।[13] १०। यानि त्र्यहस्य पूर्वस्य वैश्वानरीयाणि तान्युत्तरस्य ।[14] ११। प्र ये शुम्भन्ते जनस्य गोपा इत्याग्निमारुतम् ।[15] १२। ॥ ७॥

अथ ओजिष्ठमित्याज्यं पञ्चमस्य[1] सर्वं चोत्तमां परिहाप्य ।[2] १। संहार्यः प्रउगः ।[3] २। अयं पिब तव वायो स त्वं नो देवेति तृचः[4] शतेना[5] आ नो मित्रावरुणा[6] ऽ नो[7] गोमन्तमतश्चिदिन्द्र णो[8] विश्वे देवा ऋतावृध इति तृचानि ।[9] ३। क स्य वीर इति मरुत्वतीयम् ।[10] ४। एतायामेति निष्केवल्यम् ।[11] ५। तृतीयात्सावित्रद्यावापृथिवीये ।[12] ६। प्र। वः स्पळक्रंस्वित्र दृष्किशोरित्याग्निमारुतम् ।[13] ७। ॥ ८॥

सखायः सं वः सम्यञ्चमित्याज्यं षष्ठस्य[1] सर्वं चोत्तमां परिहाप्य ।[2] १। संहार्यः प्रउगः ।[3] २। वायवा याहि दर्शत[4] रथेन पृथुपाजसा[5] यद्य सूर उदिते प्रति वां सूर उदित इति वा[6] पुरुप्रिया णा[7] उप नो हरिभिर्विश्वे[8] देवास आ गतेति भारद्वाज[9]मिति तृचानि ।[10] ३। महाँ इन्द्रो नृवदिति मरुत्वतीयम् ।[11] ४। यो जात इति निष्केवल्यम् ।[12] ५। द्वितीयात्सावित्रम् ।[13] ६। अयमस्तु त्य इति वैश्वदेवम् ।[14] ७। धारावरास्तमशो द्युभिरित्याग्निमारुतम् ।[15] ८। इन्द्र इष्योत वैश्वदेवं षष्ठस्याह्नो द्वितीये ऽभिप्लवे ।[16] ९। उपायानकेति तृतीये ।[17] १०। अग्निरिन्द्र इति चतुर्थे ।[18] ११। शं न इन्द्राग्नी इति वा ।[19] १२। प्रथमं वा पूर्वस्मिन्पटले द्वितीयमुत्तरे ।[20] १३। परावत इति पञ्चमे ।[21] १४। ॥ ९॥

अभिजित्सर्वस्तोम उभयसामा रथन्तरपृष्ठो बृहत्पृष्ठो वाग्निष्टोमः ।१। प्र वो देवाय यदाहिष्ठमित्याज्यम् ।२। उभौ माधुच्छन्दसगार्त्समदौ प्रउगौ ।३। माधुच्छन्दसानि पूर्वाणि तृचानि गार्त्समदान्युत्तराणि ।४। वैश्वदेवं वा गार्त्समदानाम् ।५। ऐकाहिकं वा प्रातःसवनम् ।६। इन्द्र पिब तुभ्यं सुतो मदायेत्यैकाहिकादूर्ध्वं मरुत्वतीयात् ।७। या त ऊतिरिति निष्केवल्यात् ।८। पूर्वे तु बृहत्पृष्ठे ।९। एकसूक्ते वा। पिबा सोममभि तमु ष्टुहीति। पूर्वस्योत्तमासु स्तुवन्ति ।१०। एकाहात्तृतीयसवनम् ।११। ॥१०॥

सप्तदशस्तोमाः स्वरसामानः ।१। रथन्तरं पृष्ठं प्रथमस्य बृहद्-द्वितीयस्योभयसामा तृतीयो रथन्तरपृष्ठः ।२। स्वरपृष्ठाः कौषीतकेः ।३। बृहद्रथन्तरे पवमानेषु ।४। अग्निष्टोमाः पैङ्गस्य ।५। उक्थ्याः कौषीतकेः ।६। आ यन्नैर्बृहद्यो ऽग्न ओजिष्ठमित्याज्यानि[7] सर्वस्तोमाः परिहाप्य ।[8]७। ये व्यहस्य प्रथमस्य ते प्रउगाः ।[9]८। क ई वीर इति प्रथमस्य स्वरसाम्नो मरुत्वतीयं कयाशुभीयं द्वितीयस्य गायत्साम्नेति तृतीयस्य ।[10]९। सामप्रगाथांश्च प्रस्त्वा कद्वतः प्रगाथाम् ।[11]१०। कं नव्य इति प्रथमे कदू न्वस्येति द्वितीय इमा उ त्वा पुरूवसो इति तृतीये बृहतश्च योनिः ।[12]११। यस्ते साधिष्ठ इत्युत्तमां परिहाप्यार्वायमिति च प्रथमे[13] गायन्ति त्वापादित उदु नश्चित्तम इति द्वितीये[14] इन्द्रं विश्वाः सं च त्वे जग्मुरिति तृतीये ।[15]१२। इति बृहद्रथन्तरपृष्ठानाम् ।[16]१३। यज्ञायज्ञा अपूर्व्येति स्तोत्रियः स्वरपृष्ठानाम् ।[17]१४। यदिन्द्र चित्र मेहनेति द्वे या इन्द्र भुज इति तृतीयानुरूपश्च

।१५। मत्स्यपायि ते मह इति वा द्वितीयस्य । प्रथमां तृतीयां करोति ।१६। मत्वि नो वसदस्य इति द्वे वयं घ त्वेति तृतीयानुरूपस्य ।१७। मत्स्वा पिपीषत इति वा तृतीयस्य । चतुर्थीं तृतीयां करोति ।१८। इममिन्द्र सुतं पिबेति द्वे क ईं वेदेति तृतीयानुरूपस्य ।१९। ॥११॥

यतो बृहतीकः स्तोत्रियः स्तामतो बृहतीको ऽनुरूपः कार्यः ।१। धाय्यां शस्त्वा कदतश्च रथन्तरस्य योनिं प्रथमे बृहतो द्वितीय उभयोस्तृतीये ।२। पूर्वां सर्वत्र रथन्तरस्य ।३। यमिन्द्र दधिष इति द्वे प्रथमे स्वरसि लेति द्वितीये द्याना त्वगो न वारण इति तृतीये ।४। इन्द्र तुभ्यमिन्मघवन्निति नवानां तिस्रस्तिस्रो ऽन्वहं पूर्वाणि च सूक्तानि ।५। तथानि वोक्षत्योभयानि सूक्तानि ।६। स्वरयोनिषु चोल्हयोः ।७। प्रागामृशुभास्तृचाद्वा प्रगाथेनं मंशंसति ।८। प्रथमात्पृष्ठात्तृतीयस्तवमामीति बृहद्रथन्तरपृष्ठानाम् ।९। प्रतिपदश्च स्वरपृष्ठानाम् ।१०। स्वरयोनीनां च ।११। अनुचरप्रभृति समूल्हान्मध्यमात्पृष्ठात् ।१२। उद्धृत्य तु वैश्वदेवानाम्मुत्तमानि सूक्तानि त्वर्षं न प्र वः पान्तं रघुमन्यवसं मलया कदित्येति करोति ।१३। अग्निरिन्द्र इति वा प्रथमे ।१४। प्र ये शुम्भन्त इति च मारुतम् ।१५। देवान्हुव इति द्वितीये ।१६। उषासानक्तेति तृतीये ।१७। ॥१२॥

एकविंशस्तोमं बृहत्पृष्ठं महादिवाकीर्त्यं वाग्निष्टोमो विषुवान् ।१। पुरादित्यस्यास्तमयात्संस्थाप्यः ।२। उदिते प्रातरनुवाकः ।३। यथाप्रकृति वा ।४। अग्निं मन्ये पितरमित्युदिते प्रतिपत्प्रातरनुवा-

कश्च ।५। शतं दशशतं विंशतिशतं वानुब्रूयात् ।६। वासिष्ठमाग्नी-सूक्तम् ।७। सौर्यः पशुरुपालम्भ्यः सवनीयस्य ।८। चित्रं देवानामिति पुरोनुवाक्यास्तिस्र उत्तरा याज्याः सौर्यस्य ।९। उपांशु ।१०। वसुद्राद्रूर्मिरित्याज्यम् ।११। त्रैष्टुभः प्रउगः ।१२। मध्य-माच्छन्दोमास्तोत्रीणि हृषानि प्रथमे चोत्तमं च ।१३। प्रथमास्तोत्रीणि ।१४। आश्विने तु भानुमती तृतीया ।१५। प्र मंहिष्ठाय मदनादिति वैश्वदेवम् ।१६। ऐकाहिकं वा प्रातःसवनम् ।१७। प्र वो देवाय त्वं हि चैत्रवदिति वा मरुत्वतीयम् ।१८। माधुच्छन्दसश्च ।१९। कया शुभा त्वं सुतेषं अभिष्टा जय इति मरुत्वतीयम् ।२०। आयन्त इव सूर्यमिति स्तोत्रियो ऽसयोनौ हरति ।२१। यद्याव इन्द्रेत्यनुरूपः ।२२। महादिवाकीर्त्यं वा ।२३। चित्रं देवानामिति स्तोत्रियो महादिवाकीर्त्यस्य ।२४। उत्तरे च ।२५। उत्सूर्यो बृहदर्चींष्यश्रेत इति तृतीयानुरूपस्य ।२६। बण्महानुदु त्यद्दर्शतमिति वा स्तोत्रियानुरूपौ प्रगाथौ ।२७। विभ्राड् बृहदिति वा स्तोत्रियो वि सूर्यो मध्य इत्यनुरूपः ।२८। विप्राहा ता सुमनस इति वा ।२९। बण्महानिति सामप्रगाथः ।३०। यः सत्राहा विचर्ष-णिरिति वा ।३१। रथन्तरस्य योनिं स्वयोनौ हरति ।३२। उभयोरसयोनौ ।३३। महादिवाकीर्त्यं च ।३४। ॥१३॥

षष्ठेने पवमाने सामगाः कुर्युः ।१। नाक्रियमाणयोः शंसेत् ।२। इन्द्रः किलेत्युत्स्यमुखीयाः ।३। शं नो भवत्र चक्षसेति महा-दिवाकीर्त्यं ।४। यौनेय इन्द्रेति तृचं स्वयोनौ हरति ।५। य एक इद्धव्य इत्यसयोनौ ।६। महादिवाकीर्त्यं च ।७। तमु ष्टुही-

त्युद्धृतस्ववृहद्रथन्तरे ।८। अभि त्वं मेषम् ।९। ऋतुर्जनित्रीयस्य नव शस्त्वा सर्वहरेवां निविदम् ।१०। आ सत्यो यातु ।११। विश्वजित इत्युत्तमां परिशिष्य ।१२। आह्वय दूरोहणं रोहति ।१३। हंसः शुचिषदिति पच्छो ऽर्धर्चशस्त्रिपच्छो ऽनवानं त्रिपच्छो ऽर्धर्चशः पच्छः ।१४। उत्तमासुपसंशस्य ।१५। एष प्र पूर्वीः ।१६। पतङ्गमक्तम् ।१७। भद्रं नः ।१८। इति वैश्यम् ।१९। अथ कौषीतकम् ।२०। समानमोक्थमुखीयायाः ।२१। ऋतुर्जनित्रीयमुद्धृतस्ववृहद्रथन्तरे ।२२। तस्यैवैकादश स्वयोनौ ।२३। नवान्यत्र ।२४। एन्द्र याहि हरिभिरिति पञ्चदशोद्धृत्य साम्नम् ।२५। अरोरेकादश शस्त्वा निविदम् ।२६। अभूरेक इति साम्नस्य स्थाने ।२७। तार्क्ष्यः पूर्वः पतङ्गात् ।२८। एकशतं निष्केवल्यम् ।२९। प्रथमात्स्वाविचम् ।३०। द्वितीयाद्यावापृथिवीयम् ।३१। यत्रादाभेवमाहते ।३२। देवान्हुव इति वैश्वदेवम् ।३३। तृतीयादैश्वानरीयम् ।३४। मूर्धानं मूर्धा दिव इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ ।३५। वेदिषद इति जातवेदसीयम् ।३६। आहृताः स्वरसामानः ।३७। ॥१४॥

विश्वजित्सर्वस्तोमः सर्वपृष्ठो बृहत्पृष्ठो वाग्निष्टोमः ।१। अग्निं नर इत्याज्यम् ।२। त्वं हि क्षैतवदिति बृहत्पृष्ठस्य ।३। माधुच्छन्दसः प्रउगः ।४। चतुर्विंशमाध्यन्दिनः ।५। वैराजस्य स्तोत्रियानुरूपौ शस्त्वा सर्वपृष्ठे प्रगाथं च रथन्तरस्य योनिं बृहतश्च ।६। अनुचरप्रभृति यथान्तृतीयसवनम् ।७। कथा देवानामिति वैश्वदेवं माध्निकस्य बृहत्पृष्ठस्य ।८। आनोभद्रीयमेकाहस्य ।९। सर्वपृष्ठे

विश्वजिति पुरस्तात्साहतस्य सूक्तस्य होतैतयामहतं शंसति ।२०। जगतीशंसमन्यूङ्खम् ।२१। पङ्क्तिशंसं वा न्यूङ्खम्।२२। अन्यूङ्खं वा ।२३। समग्रे यज्ञानामित्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ स्तोत्रियानुरूपौ ।२४। ॥१५॥

इति शाङ्खायनसूत्र एकादशो ऽध्यायः समाप्तः।

होत्रकाणाम्।१। प्रातःसवने कर्म।२। आ नो मित्रा-वरुणा मित्रं वयं मित्रं हुवे ऽयं वां मित्रावरुणा पुरूरुणा चित्प्रति वां सूर उदिते प्र वो मित्राय यदद्य सूर उदिते प्र मित्रयोरहा नः शतमिति स्तोत्रिया मैत्रावरुणस्य।३। आ याहि सुषुमेन्द्रमिद्गाथिन इन्द्रेण सं हीन्द्रो दधीच उत्तिष्ठन्नोजसा सह भिन्धि विश्वाः प्र सम्राजं चर्षणीनां तमिन्द्रं वाजयामसि महाँ इन्द्रो य ओजसा युञ्जन्ति ब्रध्नमिति ब्राह्मणाच्छंसिनः।४। इन्द्राग्नी आ गतं सुतमिन्द्रे अग्ना नमो बृहदियं वामस्य मन्मनस्ता हुवे ययोरिदमिन्द्राग्नी युवामिमे यज्ञस्य हि स्थ ऋत्विजेयं वामस्य मन्मनस्ता हुवे ययोरिदमिन्द्रे अग्ना नमो बृहत्तमीलिष्व ता हि शश्वन्त इति वाच्छावाकस्य।५।॥१॥

द्विरात्रप्रभृतिष्वहःसंघातेष्वनुरूपाः श्वःस्तोत्रियाः समानस्तोत्रि-येष्वपि।१। परे वा।२। नित्यांस्तृचानन्त्याच्छस्त्राणां पर्यास इत्याचक्षते।३। प्रति वां सूर उदित इति मैत्रावरुणस्य।४। काव्येभिरदाभ्येति स्तोत्रिये वा।५। सति श्वःस्तोत्रिये वा।६। उद्वेदभीति ब्राह्मणाच्छंसिनः।७। इन्द्राग्नी अवसेत्यच्छावाकस्य।८। अन्तरेणानुरूपं पर्यासं चावापस्थानम्।९। एकया द्वाभ्यां वा स्तोममतिशंसन्ति।१०। भूयसा विहृति।११। सर्वपृष्ठे च विश्वजिति।१२। एकया दशमे ऽहनि।१३। युवं दक्षमा नो बर्हीं रिशादसो यं रक्षन्ति कथा राधाम ऋजुनीती नो मा कस्मा अकृतकद्‌ मित्रो नो अत्यंहतिं महि वो महतां योमस्य मित्रावरुणा ते नः सन्तु युजः प्र यो वां मित्रावरुणा महि

श्रीणामित्येकपातिन्यः ।१४। काव्येभिरदाभ्या नो गन्तमिति तृचौ ।१५। सप्तचत्वारिंशन्मैत्रावरुण्यो गायत्र्यो दाशतयीषु तासां मैत्रावरुणः ।१६। चतुश्चत्वारिंशदैन्द्राणि गायत्राणि तेषां ब्राह्मणाच्छंसी ।१७। इहेन्द्राग्नी उप ह्वये तेषामिन्द्रवर्णेति पच्छः ।१८। अयं सोम चमू सुत इति द्वे ।१९। उप स्रक्वेष्वित्येका ।२०। युवेषां यज्ञमिति सप्त ।२१। षट्चत्वारिंशदैन्द्राग्न्यो गायत्र्यो दाशतयीषु तासामच्छावाकः ।२२। दशमादह्नः स्तोत्रिया विश्वजिति सर्वपृष्ठे ।२३। षष्ठस्याह्नः स्तोत्रियानुरूपाण्युत्तमेनरेषां पञ्चानां स्तोत्रियाञ्छंसन्ति ।२४। आद्यन्तानाद्यन्तस्तोमेषु ।२५। ऊर्ध्वमेकाहभूतस्य ।२६। पर्यासैः परिदधाति ।२७। ॥२॥

माध्यन्दिनेषु विकारः ।१। अन्यानि उक्थान्युत्तरयोः सवनयोः पर्यासा इत्याचक्षते ।२। द्विसूक्ता माध्यन्दिनाः ।३। चतुःसूक्तान्युक्थानि ।४। अप प्राच इति सदा मैत्रावरुणस्योक्थमुखीया ।५। अंसा मर्त्या यत्र इन्द्र इति द्वितीये ।६। युध्मस्य ते कथा महामिति तृतीये ।७। प्र वो महे महिवृधे भरध्वं यजामह इन्द्रमिति तृचौ ।८। सद्यो ह य न इन्द्रो दूरादा न आसादिति चतुर्थे ।९।[8] प्रो ष्वस्मा उभे यदिन्द्रेति तृचौ ।१०।[9] गर्भे नु सन्वा सुष्टुतिरिति पञ्चमे ।११।[10] इन्द्राय हि द्यौरिति उत्तमम् ।१२।[11] आ नः स्तुत उप वाजेभिरूत्या सत्यो यानिति षष्ठे ।१३।[12] तद्धीनसूक्तम् ।१४।[13] मध्यमे त्र्यहे द्वयाञ्चिहत्यानीत्याचक्षते ।१५।[14] षड्न्यान्स्तोत्रियानुरूपाभ्यां तृचेभ्यश्च तत्प्रदेशे प्रतीयेत ।१६।[15] चतुर्थपञ्चमयोरह्नोः सप्तं सर्वेषां तत्प्रथमे छन्दोमे ।१७।[16] चतुर्तीय-

पञ्चमयोस्तन्माध्यमे ।१८। यत्चतुर्थपञ्चयोस्तदुत्तमे ।१९। त्वं मही इन्द्र तुभ्यं हेति यत्र होतादीनसूक्तं शंसेत् ।२०। स्रे ह यत्पित-रथिन्न इन्द्रेत्येकविंशतिच्छन्दोमेषु पुरस्तात्पर्यासस्य ।२१। मा चिद्-न्यद्वि शंसत मा मेम मा अभिशोत्यस्य स्तोत्रियानुरूपौ प्रगाथौ दशमे ऽहनि ।२२। आ धूर्ष्वस्मा इति च द्विपदा ।२३। ॥ ३॥

कं नव्य इति ब्राह्मणाच्छंसिनो ऽनुरूपादनन्तरः प्रगाथः कदा-नैकाह्निकस्य स्थाने ।१। ब्रह्माण न इति चोक्थमुखीया ।२। उदु ब्रह्माणीति सदा पर्यासः ।३। वयं घ त्वा क ईं वेदेति स्तोत्रियानुरूपौ तृतीये ऽहनि ।४। प्रथमयोश्च च्छन्दोमयोः ।५। विपर्यस्तौ तु मध्यमे ।६। यदिन्द्र प्रागपागुदगिति वा स्तोत्रियानु-रूपौ प्रगाथौ ।७। अध्वर्यवो भरतेन्द्रायेत्येकादश तृतीये ।८। विश्वाः पृतना इति स्तोत्रियः ।९। तमिन्द्रं जोहवीमि मघवानि ते महे ऽस्मा अस्मा इत्यनुरूपः ।१०। कदा वसो स्तोत्रं यो बाधा विवाच इति तृचौ ।११। य एक इद्धव्य इति चतुर्थे ।१२। इन्द्रो मदाय मदेमदे हीति स्तोत्रियानुरूपौ ।१३। आ याहि कृणवाम यो न इन्द्राभित इति तृचौ ।१४। यस्तिग्मशृङ्ग इति पञ्चमे ।१५। सुरूपकृत्नुमिति स्तोत्रियानुरूपौ ।१६। त्वया वयं मघवन्निति तृचम् ।१७। अस्मा इदु प्र तवस इति षष्ठे ।१८। तद्धीनसूक्तम् ।१९। आयन्त इव सूर्यं अग्धू पु शचीपत इति स्तोत्रियानुरूपौ प्रगाथा उत्तमे छन्दोमे ।२०। त्वं मही इन्द्र यो हेत्यहीनसूक्तस्य स्थाने ।२१। इन्द्रं स्तवेति च्छन्दोमेषु पुरस्तात्पर्यासस्य ।२२। उदु त्ये मधुमत्तमा उदिन्वस्य रिच्यत

इति स्तोत्रियानुरूपौ प्रगाथौ दशमे ऽहनि ।२२। त्रिकद्रुकेषु मन्दिष इति वा स्तोत्रियः ।२३। उत्तमा च तमिन्द्रं जोहवीमि विश्वाः पृतना इत्यनुरूपः ।२४। रायस्काम इति च द्विपदा ।२५। ॥४॥

कदू न्वस्येत्यच्छावाकस्यानुरूपादनन्तरः प्रगाथः कदानैकाहिकस्य स्थाने ।१। उरुं न इति चोक्थ्यमुखीया ।२। अभि नष्टेवेति मदा पर्यासः।३। त्वामिदा वयमेनमिदा ह्य इति स्तोत्रियानुरूपौ प्रगाथौ ।४। अपूर्व्या पुरुतमानीति द्वितीये ।५। तरणिरित्सिषासतीति स्तोत्रियानुरूपौ प्रगाथौ ।६। य ओजिष्ठ इति तृतीये ।७। यो राजा नकिष्टमिति स्तोत्रियानुरूपौ प्रगाथौ ।८। सचायोरिन्द्र इन्द्र सोममिमं पिबेति तृचौ ।९। सं च त्वे जग्मुरिति चतुर्थे ।१०। स्वादोरित्थेत्या हि सोम इति स्तोत्रियानुरूपौ ।११। यच्चिद्धि सत्याव यच्चं शतक्रतविति तृचौ ।१२। कदा भुवन् रथक्षयाणीति पञ्चमे ।१३। उभे यदिन्द्रेति स्तोत्रियानुरूपा ।१४। विदुष्टे अस्य वीर्यस्येति तिस्रः ।१५। शग्धदुक्षिणिति षष्ठे ।१६। तद्दीनसूक्तम् ।१७। नकिष्टं म ला इहन्त इति स्तोत्रियानुरूपौ प्रथमे छन्दोमे ।१८। उभयं शृणवदिति मध्यमे ।१९। यत इन्द्र भयामहे इत्युत्तमे ।२०। सर्वे प्रगाथाः ।२१। इच्छन्ति त्वेति च्छन्दोमेषु पुरस्तात्पर्यासस्य ।२२। अया वाजमिति च द्विपदा दशमे ऽहनि ।२३। ऐकाहिकं च पूर्वम् ।२४। ॥५॥

अन्तरेण प्रायणीयोदयनीयौ कद्वन्तौ चोक्थ्यमुखीयास्त्वाभिनष्टीयं च इहतीकारं च बार्हतानाम् ।१। अन्तरेणोक्थ्यमुखीयां

सूक्ते चावापत्यानम् ।२। पृष्ठ्याभ्यूकान्यभिप्लवे ।३। अहीनसूक्तानां स्थाने द्वितीयादह्नः सूक्तानि ।४। उत्तरं मैत्रावरुणस्य ।५। प्रथमात् च्यहात्स्वरसामसु ।६। चतुर्विंशे ऽभिजिति विषुवति इन्द्रस्तुते विश्वजिति महाव्रते च षष्ठात् ।७। विश्वजिति सर्वपृष्ठे ।८। महानाम्नीमां मैत्रावरुणः स्तोत्रियानुरूपौ समप्रगाथौ ।९। कद्वन्तं प्रगाथं वैरूपस्य ब्राह्मणाच्छंसी ।१०। रेवतीनामच्छावाकः ।११। वालखिल्या अविहृता मैत्रावरुणः षट् सूक्तानीन्द्रनिहवं परिधाप्या नो विश्वे सजोषस इति च प्रगाथम् ।१२। वृषाकपिमिन्द्रते कुन्तापमन्यूङ्खं ब्राह्मणाच्छंसी ।१३। द्यौर्न य इन्द्रेत्येवयामरुतः स्थाने विष्णुन्यङ्गमच्छावाकः ।१४। अभूरेक इति सामसूक्तं मैत्रावरुणस्य ।१५। यो जात इति ब्राह्मणाच्छंसिनः ।१६। प्र घा न्वस्येत्यच्छावाकस्य ।१७। सामसूक्तानि अहीनसूक्तानि अहैकाहिकीभिः परिदधति ।१८। एकाहभूतस्यैकाहिकान्यर्यामानूङ्खमहीनसूक्तेभ्यः ।१९। ॥ ६ ॥

उक्थ्येषु क्रियमाणेषु वालखिल्या वृषाकपिं विष्णुन्यङ्गमित्युद्धृत्य परिशेषान्माध्यन्दिनेषु शंसन्ति ।१। षष्ठादह्न उक्थानि ।२। अथ यदि षष्ठाह्निकं तृतीयसवनमसर्वपृष्ठे ऽहनि मन्येत स्याद्वितीयादह्न उक्थानि ।३। परोक्षपृष्ठे प्रतिशिल्पानि क्रियन्ते ।४। उद्धृत्य वाल॰खिल्या मैत्रावरुणः पिबा सुतस्य रसिन इत्यैन्द्राम्प्रगाथायाच्छस्त्वा ।५। वृषाकपिमुद्धृत्य ब्राह्मणाच्छंसीन्द्रो मदायेति पङ्क्तैरैन्द्रैः शंसति ।६। विष्णुन्यङ्गमेवाच्छावाकः ।७। इति परोक्षपृष्ठे ।८। ॥ ७ ॥

अथ विश्वजित्कल्पे ।१। ऐकाहिकाम्प्रगाथाच्छस्त्वा वालखिल्या वृषाकपिं विष्णुन्यङ्गं नाभानेदिष्ठं च सर्वशस्त्राच्या ।२। चतुर्थेचं

पश्चात्पदष्टम्भिः स्यादिदम्भिः प्रथमे न्यूङ्ख्येतो ३ श्रो ३ इति। ६।
तं शस्त्वा कुन्तापम्। ७। ॥ १३ ॥

इदं जना उप श्रुत नराशंस स्तविष्यते।
षष्टिं सहस्रा नवतिं च कौरम आ रुशमेषु दद्महे ॥ १ ॥
उष्ट्रा यस्य प्रवाहिणो वधूमन्तो द्विर्दश।
वर्ष्मा रथस्य नि जिहीडते दिव ईषमाणा उपस्पृशः ॥ २ ॥
एष इषाय मामहे शतं निष्कान्दश स्रजः।
त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥ ३ ॥
प्र रेभासो मनीषा वृषा गाव इवेरते।
अमोत पुत्रका एषाममोत गा इवासते ॥ ४ ॥
प्र रेभ धियं भरस्व गोविदं वसुविदम्।
देवत्रेमां वाचं श्रीणीहीषुर्नावीरस्तारम् ॥ ५ ॥ १ ॥ १४ ॥
वच्यस्व रेभ वच्यस्व वृक्षे न पक्वे शकुनः।
नष्टे जिह्वा चर्चरीति क्षुरो न भुरिजोरिव ॥ १ ॥
इन्द्रः कारुमबूबुधदुत्तिष्ठ वि चरा जनम्।
ममेदुग्रस्य चर्कृधि सर्व इत्ते पृणादरिः ॥ २ ॥
इह गावः प्र जायध्वमिहाश्वा इह पूरुषाः।
इहो सहस्रदक्षिणो ऽपि पूषा नि षीदति ॥ ३ ॥
नेमा इन्द्र गावो रिषन्मो आसां गोपती रिषत्।
मासाममित्रयुर्जन इन्द्र मा स्तेन ईशत ॥ ४ ॥
यदिन्द्रादो दाशराज्ञे ऽमानुषं वि गाहथाः।
विरूपः सर्वस्मा आसीत्सह यक्षाय कल्पते ॥ ५ ॥ २ ॥ १५ ॥

इह मदो३ इति वैराजन्तृचमुक्त्वा मदे मधोर्मदस्य मदिरस्य मदेवो३ ओ३ ओथा मोदैवेति प्रतिगृणाति ।११। ऋतुर्जनित्री ।१२। तमस्य द्यावापृथिवी ।१३। विष्णोर्नु कम् ।१४। प्र वः पान्तमन्धसः ।१५। छन्दोमेषु च ।१६। तिस्रस्तु प्रथमे ।१७। भवा मित्र इति द्वचाव पूर्वमुत्तरयोश्छन्दोमयोः ।१८। नू मर्तः परो मात्रयेत्युत्तमामुद्धृत्य षष्ठे ।१९। यदिन्द्र चित्र यदिन्द्र ते चतस्र इति स्तोत्रियानुरूपौ प्रथमे छन्दोमे ।२०। पुरां भिन्दुरिति मध्यमे। पूर्वस्तृचो ऽनुरूपस्तृतीया तु प्रथमा ।२१। गायन्ति त्वेत्युत्तमे ।२२। ॥२६॥

चतुर्विंशे शस्त्रं प्रथमाच्छन्दोमात्त्वैर्यात् ।१। यच्चतुर्णां द्वितीयप्रभृतीनां तच्चतुर्णामाभिप्लविकानाम् ।२। तृतीयप्रभृतिभ्यः स्वरसामसु ।३। अथ यदभिजिति विषुवत्ति बृहत्पृष्ठं विश्वजिति महाव्रतीयमहरित्युक्थ्यानि कुर्युर्यात्तुर्विंशिकान्युक्थानि ।४। अथ यदि पृष्ठ्याभिप्लवयोः प्रथमे ऽहनी दशममहरित्युक्थ्यानि कुर्युरैकाहिकान्युक्थानि ।५। उत्तममाभिप्लविकमुक्थं कुर्युर्यद्द्वितीयस्याह्नस्तृतीयसवनं तन्तृतीयसवनं तन्तृतीयसवनम् ।६। ॥२७॥

इति शाङ्खायनश्रौतसूत्रे द्वादशो ऽध्यायः समाप्तः ।

# ओम् ।

पूर्वकारिणश्छन्दोगा अध्वर्यवः ।१। ते चेदनुपदिष्टं कुर्युः ।२। एतावत्त्व स्तोत्रीयाणामानुपूर्व्यं हविषां दैवत उच्चैरुपांशुतायां चाध्वर्यु-मनुविदधीत ।३। सौत्रिये छन्दोगमहर्षियोगे स्तोमविकारे पृष्ठे संख्यायां च ।४। ते चेत्पादं वार्धर्चं वा विपर्यस्येयुरूनं वातिरिक्तं वा कुर्युर्न तदाद्रियेत ।५। यथास्थमेव विपर्यासमनुविदधीत ।६। स्तोत्रीयश्चेत्पादो विकर्षेण पूर्येत तस्य संख्याय द्वितीयं स्तोत्रीयम् ।७। ऊर्ध्वं तु स्वराक्षमानश्छन्दोमानानि व्यञ्जनानि लुप्येरन् ।८। ॥१॥

आनीते पशौ म्रुते अनुपाकृते अन्यमालभेतर्लिंगभ्यस्तं कारयेत् ।१। उपाकृते वेपमाने

यस्माद्भीषावेपिष्ठास्ततो नो अभयं कृधि ।

पशूनः सर्वान्गोपाय नमो रुद्राय मीढुषे ॥

स्वाहेति जुहोति ।२। यस्माद्भीषावाशिष्ठा इति वाश्यमाने ।३। यस्माद्भीषापलायिष्ठा इति पलायमाने ।४। यस्माद्भीषा न्यषद इत्युपविष्टे ।५। यस्माद्भीषा संज्ञासा इति म्रुते ।६। नष्टे म्रुते पलायिते वान्यं तद्रूपं तद्दैवत्यं पशुमालभेत ।७। म्रुतस्य वपां पुरोडाशमवदानानीतीतरस्य वपाद्वारेषूपकुर्यात् ।८। ॥२॥

प्रवृत्तेषु म्रुते प्रयाजेषु तेनैव संस्थाप्यम् ।१। अवदाने नष्टे

दुष्टे विमथिते वाज्यं प्रतिनिदध्यात् ।१। हृदयनाशे ऽन्यमालभेत ।२। यदि च कामयेतार्त्तिं विमथितार ऋच्छेयुरिति कुविदङ्ग यवमन्त इत्याग्नीध्रीये जुहुयात् ।३। अष्टापद्यां वपायामनूबन्ध्यायां गर्भस्य त्वचो वपारूपं कलीकरणानां फालीकरणान्ममं मति शामित्रे श्रपयित्वेतरस्य वषट्कारेषु शामित्र एव जुहुयात् ।५। ॥३॥

यूपे विरूढे ऽनपरूढे त्वाष्ट्रं बहुरूपमालभेत ।१। पिशङ्गरूपः सुभरो वयोधास्त्वन्नस्तुरीपमध पोषयित्नु देवस्त्वष्टः सविता विश्वरूप इति पुरोनुवाक्याः ।२। प्र सु महे सुशरणाय प्रथमभाजं देव त्वष्टर्यद्ध चारुत्वमानडिति याज्याः ।३। ॥४॥

समानविषये विहितयोः सुत्ययोरङ्गोः संनिपातमं संसव इत्याचक्षते ।१। पूर्वं प्रातरनुवाकमुपाकृत्य पूर्वं संस्थापयेयुः ।२। सुसमिद्धे जुहुयुः ।३। संवेशायोपवेशाय गायत्र्यै छन्दसे ऽभिभूत्यै स्वाहेति प्रातःसवने ।४। त्रिष्टुभे छन्दस इति माध्यन्दिने ।५। जगत्यै छन्दस इति तृतीयसवने ।६। अध्वर्युं स्वतमिच्छन्प्राजापत्याभिस्तिसृभिरध्वर्युः प्रातःसवने जुहुयात् ।७। होतारं होता माध्यन्दिने ।८। उद्गातारमुद्गाता तृतीयसवने ।९। ब्रह्माणं ब्रह्मानुसवनम् ।१०। यजमानं यजमानो ऽनुसवनम् ।११। सर्वान्स्वतानिच्छन्तः सर्वे ऽनुसवनम् ।१२। छन्दश्यन्तरे कुर्युः ।१३। आभीकमाभीवमभिनिधनमभीवर्तं च ।१४। कयाशुभीयं मरुत्वतीयम् ।१५। सजनीयं निष्केवल्यम् ।१६। विहव्यो वैश्वदेवम् ।१७। पूर्वेषु संस्थापयत्सूत्तरां संस्थां कुर्वीत ।१८। अतिरात्रं कुर्वाणेषु द्विरात्रम् ।१९। द्विरात्रं कुर्वाणेषु त्रिरात्रम् ।२०। तस्यां वा संस्थायां

भूयसीर्दक्षिणा दद्यात् । २१ । स्तवन्तो वा विहरन्ति वायुराकाशश्च । २२ । ॥ ५ ॥

क्रीते सोमे ऽपहृते ऽनतिपन्नकालमन्यमाहृत्याभिषुणुयात् । १ । सोमाहाराय सोमविक्रयिणे वा किंचिद्दद्यात् । २ । अनधिगम्यमाने पूतीकाङ्कृतपुष्पाण्यर्जुनानि सुयाज्याभिषुत्य[3] प्रतिदुहा प्रातःसवने श्रीणीयाच्छृतेन माध्यन्दिने दध्ना तृतीयसवने । ३ । एकां गां दक्षिणां दत्वावभृथादुदेत्य पुनर्दीक्षेत । ४ । तत्र क्रतुदक्षिणा दद्यात् । ५ । एतदेव । ६ । अभिदग्धे पञ्च वा दक्षिणा दद्यात् । ७ । ॥ ६ ॥

प्रातःसवनात्सोमे ऽतिरिक्ते । १ । अस्ति सोमो अयं सुत इति स्तोत्रियानुरूपौ होतुः । २ । ऐन्द्रावैष्णवीभिः स्तोममतिशंसेत् । ३ । ऐन्द्रावैष्णवी याज्या । ४ । इन्द्रमिद्देवतातय इन्द्रदेवा अवन्तु ॥ इति पद । ५ । उत्तमया परिधाय विष्णोः कर्माणि पश्यतेति यजति । ६ । ॥ ७ ॥

माध्यन्दिनादतिरिक्ते । १ । सप्रथानुद स्यद्यतमिति स्तोत्रियानुरूपौ प्रगाथौ । २ । ऐन्द्रावैष्णवीभिः स्तोममतिशंसेत् । ३ । ऐन्द्रावैष्णवी याज्या । ४ । ॥ ८ ॥

तृतीयसवनादतिरिक्ते । १ । प्र तत्ते अद्य शिपिविष्ट प्र तद्विष्णुरिति स्तोत्रियानुरूपौ । २ । ऐन्द्रावैष्णवीभिः स्तोममतिशंसेत् । ३ । ऐन्द्रावैष्णवी याज्या । ४ । ॥ ९ ॥

आश्विनादतिरिक्ते । १ । आश्विनीभिः स्तोममतिशंसेत् । २ । आश्विनी याज्या । ३ । अप्रस्तुतं चेत्पर्यायैरभिषुच्येत पञ्चभिः स्तोमैर्होत्रकेभ्यः स्तुवते । ४ । ते स्तोत्रियानुरूपान्कल्पोक्थमुखानां जग-

